# ॥ बुधस्तोत्रम् ॥

अथ बुधस्तोत्रम् ।
अस्य श्रीबुधस्तोत्रमहामन्त्रस्य वसिष्ठ ऋषिः । अनुष्टुप्छन्दः ।
बुधो देवता । बुधप्रीत्यर्थे जपे विनियोगः ।
ध्यानम् ।
भुजैश्चतुर्भिर्वरदाभयासिगदं वहन्तं सुमुखं प्रशान्तम् ।
पीतप्रभं चन्द्रसुतं सुरेढ्यं सिम्हे निषण्णं बुधमाश्रयामि ॥

पीताम्बरः पीतवपुः पीतध्वजरथस्थितः ।
पीयूषरश्मितनयः पातु मां सर्वदा बुधः ॥ १॥

सिंहवाहं सिद्धनुतं सौम्यं सौम्यगुणान्वितम् ।
सोमसूनुं सुराराध्यं सर्वदं सौम्यमाश्रये ॥ २॥

बुधं बुद्धिप्रदातारं बाणबाणासनोज्ज्वलम् ।
भद्रप्रदं भीतिहरं भक्तपालनमाश्रये ॥ ३॥

आत्रेयगोत्रसञ्जातमाश्रितार्तिनिवारणम् ।
आदितेयकुलाराध्यमाशुसिद्धिदमाश्रये ॥ ४॥

कलानिधितनूजातं करुणारसवारिधिम् ।
कल्याणदायिनं नित्यं कन्याराश्यधिपं भजे ॥ ५॥

मन्दस्मितमुखाम्भोजं मन्मथायुतसुन्दरम् ।
मिथुनाधीशमनघं मृगाङ्कतनयं भजे ॥ ६॥

चतुर्भुजं चारुरूपं चराचरजगत्प्रभुम् ।
चर्मखड्गधरं वन्दे चन्द्रग्रहतनूभवम् ॥ ७॥

पञ्चास्यवाहनगतं पञ्चपातकनाशनम् ।
पीतगन्धं पीतमाल्यं बुधं बुधनुतं भजे ॥ ८॥

बुधस्तोत्रमिदं गुह्यं वसिष्ठेनोदितं पुरा ।
यः पठेच्छृणूयाद्वापि सर्वाभीष्टमवाप्नुयात् ॥ ९॥

इति बुधस्तोत्रं सम्पूर्णम् ।